प्रतिहारी-- भर्तः ! यशोधरा खल्वहम् ।

राजा-- यशोधरे, किं त्वया मातङ्गीजनप्रवेशो न दृष्टः ।

प्रतिहारी-- हं मातङ्गीजन इति । नित्यं भर्तृपादमूले वर्तमानस्यैव जनस्येह प्रवेशो दुर्लभः, किं पुनर्मातङ्गीजनस्य ।

राजा-- किं स्वप्नो नु मयानुभूतः । यशोधरे ! गच्छ । बालाकिः काञ्चुकीयः प्रवेश्यताम् ।

प्रतिहारी-- यद्भर्ताज्ञापयति । ( निष्क्रान्ता । )

( ततः प्रविशति काञ्चुकीयः । )

काञ्चुकीयः-- जयतु महाराजः ।

राजा-- आर्य बालाके ! प्रष्टव्यौ सांवत्सरिकपुरोहितौ-अद्य रात्रौ वातोद्भ्रामभूमिकम्पोल्कापाता दैवतप्रतिमाश्च प्रतिभासिताः किमर्थमिति ।

काञ्चुकीयः-- महाराज ! सांवत्सरिकपुरोहितौ विज्ञापयतः ।

राजा-- किमिति ।

काञ्चुकीयः-- श्रूयताम् ।

भूतं नभस्तलनिवासि नरेन्द्र ! नित्यं
कार्यान्तरेण नरलोकमिह प्रपन्नम् ।
आकाशदुन्दुभिरवैः समहीप्रकम्पै -
स्तस्यैष जन्मनि विशेषकरो विकारः ॥१०॥

राजा -

कस्मिञ्जाते सशैलेन्द्रा कम्पितेयं वसुन्धरा ।
ज्ञायतां कस्य पुत्रोऽयं किं वा जन्मप्रयोजनम् ॥११॥

इति ।

काञ्चुकीयः -- यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) जयतु महाराजः । प्रसूतवती किल देवकी ।

राजा-- किं प्रसूतम् ।

काञ्चुकीयः- दारिका प्रसूता ।

राजा- मा तावत् । एतानि महानिमित्तानि दारिकाप्रसूतिमात्रेण उत्पद्यन्ते ।

काञ्चुकीयः- प्रसीदतु महाराजः । अनृतं नाभिहितपूर्वं मया । भवतो भृत्यवर्गपरिवृताया धात्र्या हस्ते दृष्टा सा ।

राजा- अथवा ब्राह्मणवचनमनृतमपि सत्यं पश्यामि । गच्छ, वसुदेवस्तावदाहूयताम् ।

काञ्चुकीयः- यदाज्ञापयति महाराजः ( निष्क्रान्तः । )

राजा- धर्मशीलः सत्यवादी वसुदेवः । अथ तु मम समीपेऽनृतं न ब्रवीति । भवतु, श्रोष्यामस्तावत् ।

(ततः प्रविशति वसुदेवः ।)

वसुदेवः-

षण्णां सुतानां समुपेत्य नाशं वहन्निदं शोककृशं शरीरम् ।
आहूयमानोऽकरुणेन राज्ञा गच्छाम्यहं भृत्य इवास्वतन्त्रः ॥१२॥

भोः ! एवंविधा लोकवृत्तिः ।

स्मरतापि भयं राजा भयं न स्मरतापि वा ।
उभाभ्यामपि गन्तव्यो भयादप्यभयादपि ॥१३॥

(उपसृत्य) शौरसेनीमातः ! आस्यते ।

राजा- यादवीमातः , आस्यताम् ।

वसुदेवः- बाढम् । (उपविश्य) शौरसेनीमातः , किमर्थं वयमाहूताः ।

राजा- यादवीमातः, प्रसूतवती किल देवकी ।

वसुदेवः- अथ किम्, प्रसूतवती ।

राजा - किं प्रसूतम् ।

वसुदेवः- (आत्मगतम्) मयापि नामानृतं वक्तव्यं भविष्यति । अथवा कुमाररक्षणार्थमनृतमपि सत्यं पश्यामि । किमिदानीं करिष्ये । भवतु, दृष्टम् । ( प्रकाशम् ) दारिका प्रसूता तया ।

राजा–

दारिका वा कुमारो वा हन्तव्यः सर्वथा मया।
दैवं पुरुषकारेण वञ्चयिष्याम्यहं ध्रुवम् ॥१४॥

( प्रविश्य )

प्रतिहारी – जयतु भर्ता। अस्माकं भट्टिनी विज्ञापयति–दारिकेति बालेति च क्रियतां किल महाराजेनानुक्रोशः।

वसुदेवः – शौरसेनीमातः, क्रियतां तपस्विन्या देवक्या वाक्यम्। दारिकासु स्त्रीणामधिकतरः स्नेहो भवति।

राजा – किं भवान् स्मरति समयम्।

मधूकस्य ऋषेः शापं श्रुत्वा मे समयस्तदा।
देवक्या धारितान् गर्भान् दास्यामीति त्वया कृतः ॥१५॥

वसुदेवः– समय इति। एष न व्याहरामि।

प्रतिहारी– भर्तः! किमित्यस्माकं भट्टिन्यै निवेदयितव्यम्।

राजा– यशोधरे! उच्यतां देवक्याः– न युक्तमिदानीं निर्बन्धमभिधातुम्। अन्यत् प्रियतरं करिष्यामीति।

प्रतिहारी – यद् भर्ताज्ञापयति।

राजा– यशोधरे! एवं क्रियताम्।

प्रतिहारी – सुखं प्रविशतु किल भर्ता।

वसुदेवः– विविक्तमिच्छता मयापि नाम परापत्यनिधनमुपनेतव्यं भवति। किन्नु खलु कुमारमेवानीय प्रयच्छामि। अथवा,

दारिकेयं मृता पूर्वं पुनरेव समुत्थिता।
अस्य बालस्य माहात्म्यान्नैषा वधमवाप्स्यति ॥१६॥

यावदहमपि देवकीं समाश्वासयामि। (निष्क्रान्तः।)

राजा– यशोधरे प्रवेश्यतां सा दारिका।

प्रतिहारी – यद् भर्ताज्ञापयति। (निष्क्रान्ता।)

( ततः प्रविशति दारिकां गृहीत्वा धात्री रक्षिपुरुषाश्च । )

सर्वे – शनैः शनैरार्ये । इदं मध्यमद्वारम् । प्रविशत्वार्या ।

धात्री – (प्रविश्य) जयतु भर्ता । इयं दारिकास्माभिश्चिरात् प्रभृति रक्षिता ।

राजा – अहो राजदर्शनीयेयं दारिका । यद्यपि नाम स्त्रीवधः कर्तव्यो भवति ।

धात्री – शनैः शनैः भर्तः ।

राजा – इयं कंसशिला । यावत् साहसमनुष्ठास्यामि ।

अयं हि सप्तमो गर्भ ऋषिशापबलोत्थितः ।
अस्मिन् नाशं गते गर्भे मम शान्तिर्भविष्यति ॥१७॥

( गृहीत्वा प्रहृत्य ) अये,

एकांशः पतितो भूमावेकांशो दिवमुद्गतः ।
मां निहन्तुमिहोद्भूतः करैः शस्त्रसमुज्ज्वलैः । ॥१८॥

अये इयमिदानीं

तीक्ष्णाग्रं शूलमालम्ब्य रौद्रवेषेण जृम्भते ।
विनाशकाले सम्प्राप्ते कालरात्रिरिवोत्थिता ॥१९॥

( ततः प्रविशति कात्यायनी सपरिवारा । )

कात्यायनी–

शुम्भं निशुम्भं महिषं च हत्वा कृत्वा सुरांस्तान् हतशत्रुपक्षान् ।
अहं प्रसूता वसुदेववंशे कात्यायनी कंसकुलक्षयाय ॥२०॥

कुण्डोदरः–

कुण्डोदरोऽहमजितो रणचण्डकर्मा
देव्याः प्रसूतिजनितोपमहाभिनादः ।
शीघ्रं प्रयामि गगनादवनिं विशालां
दृप्तान् निहन्तुमसुरानतिवीर्यदर्पान् ॥२१॥

शूलः–

शूलोऽस्मि भूतमिह भूमितले प्रपन्नो
देव्याः प्रसादजनितोज्ज्वलचारुवेषः ।
कंसं निहत्य समरे परिकर्षयामि
तं पावकं जलनिधेरिव कार्त्तिकेयः ॥२२॥

नीलः-

अहं हि नीलः कलहस्य कर्ता सङ्ग्रामशूरो न पराङ्मुखश्च ।
निहन्मि कंसं युधि दुर्विनीतं क्रौञ्चं यथा शक्तिधरः प्रकुद्धः ॥२३॥

मनोजवः-

मनोजवो मारुततुल्यवेगो देव्यास्तु कार्यार्थमिहोपयातः ।
करोमि सङ्ग्रामशिरःसु दैत्यान् वह्निर्ज्वलानां निलयं यथैव ॥२४॥

कात्यायनी- कुण्डोदर ! शङ्कुकर्ण ! महानील ! मनोजव ! तदागम्यताम् । भगवतो विष्णोर्बालचरितमनुभवितुं गोपालकवेषप्रच्छन्ना घोषमेवावतरिष्यामः ।

सर्वे- यदाज्ञापयति भगवती । ( निष्क्रान्ता सपरिवारा कात्यायनी । )

राजा- अये, प्रभाता रजनी ।

अतः प्रविश्य शान्त्यर्थं शान्तिकर्मोचितं गृहम् ।
करोमि विपुलां शान्तिं मम शान्तिर्भविष्यति ॥२५॥

( निष्क्रान्ताः सर्वे । )

इति द्वितीयोऽङ्कः ।

## अथ तृतीयोऽङ्कः

( ततः प्रविशति वृद्धगोपालकः । )

वृद्धगोपालकः - भो मेघदत्त ! खलु, वृषभदत्त ! खलु, कुम्भदत्त ! खलु, घोषदत्त ! खलु, प्रकालयत प्रकालयत गोधनम् । एतस्मिन् वृन्दावने प्रकामं पानीयं पीत्वा हुम्भारवं कुर्वदायाति गोधनम् । एष गोत्रजान् निष्क्रम्य परिघट्टित-वल्मीकमूलो भुजङ्गैः कुवर्णैः नीलोत्पलदामभिः शृङ्गलग्नैरिव वृषभः शोभते । अन्योऽप्येष वृषभ उच्छ्रितप्रसारितपुच्छो निकुञ्चितजानुः शशीव धवलाङ्गोऽग्र-विषणाभ्यां महीमुद्वहन्निव शोभते । यावदिदानी दामकं शब्दयामि । अरे दामक ! भगवतो सुस्थलेऽवतार्य सहवत्सास्त्वमप्यागच्छ ।

( ततः प्रविशति दामकः । )

दामकः- अहो महत् तृणजालं स्वामिनो नन्दगोपस्य । सुतजननदिना-दारभ्याधिकतरमानन्दादभुतं वर्धते । भवतु, इह तिष्ठतु गोधनं, यावन्मातुलमुप-सर्प्स्यामि । (उपसृत्य) मातुल ! वन्दे ।

वृद्धगोपालकः- शान्तिर्भवतु शान्तिर्भवत्वस्माकं गोधनस्य च ।

दामकः- मातुल ! यदाप्रभृति नन्दगोपपुत्रः प्रसूतः, तदाप्रभृत्यस्माकं गोधनं वर्जितरोगं संवृत्तम् । ननु सर्वेषां गोपजनानां प्रीतिर्वर्धते । अन्यच्च, खाते खाते मूलानि, फलानि गुल्मे गुल्मे । मधु कियद् दुह्यते क्षीरं तावद् एव घृतम् । ]

वृद्धगोपालकः- अन्यच्चेदमाश्चर्यम् । दशरात्रप्रसूते नन्दगोपपुत्रे पूतना नाम दानवी विषसम्पूरितस्तना नंदगोप्या रूपं गृहीत्वागता । ततस्तया दारकं गृहीत्वा तस्य मुखे स्तनः प्रक्षिप्तः । ततस्तां विज्ञाय सुप्ता पातिता सापि दानवी भूत्वा तत एव मृता । ततो मासमात्रे नंदगोपपुत्रे शकटो नाम दानवः शकटवेषं गृहीत्वागतः । तमपि ज्ञात्वैकपादप्रहारेण चूर्णीकृतः सोऽपि दानवो भूत्वा तत एव मृतः । ततो मासपरिवृत्तो नन्दगोपपुत्र एकस्मिन् गेहे गत्वा क्षीरं पिबति, अन्यस्मिन् गेहे गत्वा दधि भक्षयति, एकस्मिन् गेहे गत्वा नवनीतं गिरति, अन्यस्मिन् गेहे गत्वा पायसं भुङ्क्ते, अपरस्मिन् गेहे गत्वा तक्रघटं प्रलोकते । ततो

कृष्टाभिर्गोपयुवतिभिर्नन्दगोप्यै उक्तम् । ततो रुष्टया नन्दगोप्या दाम गृहीत्वा तस्य मध्ये बद्ध्वा शेषमुलूखले बद्धम् । ततस्तदप्युलूखलमाघट्टयत् प्रेक्ष्य यमलार्जुनयोरपि दानवयोर्निक्षिप्तम् । ततो द्वावेकीभूतौ । तयोरन्तरेण गच्छता नन्दगोपपुत्रेणाघट्टयता समूलविटपं चूर्णीकृतौ तावपि दानवौ भूत्वा तत एव मृतौ । ततो गोपजनैरुक्तं-महाबलपराक्रमोऽद्यप्रभृति भर्तृदामोदरो नाम भवतु इति । तत आधावनप्रधावन--मात्रे नन्दगोपपुत्रे प्रलम्बो नाम दानवो नन्दगोपवेषं गृहीत्वागतः । ततः संकर्षणं कण्ठे निक्षिप्य गच्छन्तंतं विज्ञाय भर्त्रा संकर्षणेन तस्य दानवस्य शीर्षे मुष्टिप्रहारः कृतः । तेन प्रहारेणोत्क्षिप्तचक्षुः सोऽपि दानवो भूत्वा तत एव मृतः । गोपजनैः परिवृतस्तालफलानि ग्रहीतुं तालवनं गतः । तत्र तालवने धेनुको नाम दानवो गर्दभवेष गृहीत्वागतः । ततस्तमपि ज्ञात्वा, भर्तृदामोदरेण तस्य वामपादं गृहीत्वोत्क्षिप्य पातितानि तालफलानि । सोऽपि दानवो भूत्वा तत एव मृतः । ततः केशी नाम दानवः तुरङ्गवेषं गृहीत्वागतः । ततस्तमपि ज्ञात्वा भर्तृदामोदरेण तस्य मुखे कूर्परो दत्तः ततस्तेन द्विधा पाटितस्तुरङ्गः । सोऽपि दानवो भूत्वा तत एव मृतः । एतान्यन्यानि (च) कर्माणि कृतानि भर्तृदामोदरेण ।

दामक- मातुल ! सर्वं तावत् तिष्ठतु । अद्य भर्तृदामोदरोऽस्मिन् वृन्दावने गोपकन्यकाभिः सह हल्लीसकं नाम प्रक्रीडितुमागच्छति ।

वृद्धगोपालक- तेन हि सर्वैर्गोपजनैः सह भर्तृदामोदरस्य हल्लीसकं पश्यामः

दामक- यद् मातुल आज्ञापयति ।

( निष्क्रान्तौ । )

प्रवेशकः ।

( प्रविश्य )

वृद्धगोपालकः-

अनुदितमात्रे सूर्ये प्रणमत सर्वादरेण शीर्षेण ।
नित्यं जगत्मातॄणां गवाममृतपूर्णानाम् ॥ १ ॥

अहो अस्माकं पक्कणानां समृद्धिः । आटोपसज्जाः पटहरूपवेषा व्याहर्तुं गच्छामः । अस्माकं गोपकन्यकाः ! घोषसुन्दरि ! वनमाले ! चन्द्ररेखे ! मृगाक्षि ! आगच्छतागच्छत शीघ्रम् ।

( ततः प्रविशन्ति सर्वाः । )

सर्वाः- मातुल ! वन्दामहे ।

वृद्धगोपालकः- दारिका ! एष भर्ता दामोदरः गोक्षीरपाण्डरेण भर्त्रा सङ्कर्षणेन सह गोपालकैश्च परिवृतः गुहानिक्षिप्तः सिंह श्वेत एवागच्छति ।

( ततः प्रविशति गोपजनपरिवृत्तो दामोदरः सङ्कर्षणश्च । )

दामोदरः- (सविस्मयम्) अहो प्रकृत्या रमणीयानां गोपककन्यकानां वेषग्रहणविशेषः ।

एताः प्रफुल्लकमलोत्पलवक्त्रनेत्रा
गोपाङ्गनाः कनकचम्पकपुष्पगौराः ।
नानाविरागवसना मधुरप्रलापाः
क्रीडन्ति वन्यकुसुमाकुलकेशहस्ताः ॥ २ ॥

सङ्कर्षणः- एते गोपदारकाः समागताः ।

रक्तैर्वेसुकडिण्डिमैः प्रमुदिताः केचिन्नदन्तः स्थिताः
केचित् पङ्कजपत्रनेत्रवदनाः क्रीडन्ति नानाविधम् ।
घोषे जागरिमा (?) गुरुप्रमुदिता हुम्भारशब्दाकुले
वृन्दारण्यगते समप्रमुदिता गायन्ति केचित् स्थिताः ॥ ३ ॥

वृद्धगोपालकः- आम् भर्तः ! सर्वे सन्नद्धा आगताः !

दामकः- जयतु भर्ता ।

सङ्कर्षणः- दामक ! सर्वे गोपदारकाः समागताः ।

दामकः- आम् भर्तः ! सर्वे सन्नद्धा आगताः ।

दामोदरः- घोषसुन्दरि ! वनमाले ! चन्द्ररेखे ! मृगाक्षि ! घोषवासस्यानुरूपोऽयं हल्लीसकनृत्तबन्ध उपयुज्यताम् ।

सर्वाः- यद् भर्ताज्ञापयति ।

सङ्कर्षणः- दामक ! मेघनाद ! वाद्यन्तामातोद्यानि ।

उभौ- भर्तः ! तथा ।

वृद्धगोपालकः- भर्तः ! यूयं हल्लीसकं प्रक्रीडथ । अहमत्र किं करोमि ।

दामोदरः- प्रेक्षको भवान् ननु ।

वृद्धगोपालकः– भर्तः तथा।

( सर्वे नृत्यन्ति। )

वृद्धगोपालकः– ही ही सुष्ठु गीतम्। सुष्ठु वादितम्। सुष्ठु नर्तितम्। यावदहमपि नृत्यामि। परिश्रान्तः खल्वहम्।

( प्रविश्य )

गोपालकः– हा हा भर्ता अपक्रामत्वस्माद् देशाद्।

दामोदरः– दामक ! किमसि सम्भ्रान्तः।

गोपालकः– एषोऽरिष्टवृषभो नाम दानवः पिण्डीकृतनिर्घातरूपो भूमितलं खुरपुटैर्लिखन्, यस्य घोषो मेघरव इति शङ्कितो जातः।

दामोदरः– एवं प्राप्तोऽरिष्टर्षभः। इमा नो गोपदारिका दारकांश्च गृहीत्वैतत् पर्वतशिखरमारुह्य दुरात्मनो मम च युद्धविशेषं पश्यत्वार्यः। अहमस्य दर्पप्रशमनं करोमि।

( सङ्कर्षणस्तैः सह निष्क्रान्तः। )

दामोदरः– एष एव दुरात्मारिष्टर्षभः।

कृत्वा खुरैर्भूमितलं प्रभिन्नं शृङ्गैश्च कूलानि समाक्षिपंश्च।
भयार्तगोपैः प्रसमीक्ष्यमाणो नदन् समाधावति गोवृषेन्द्रः ॥४॥

( ततः प्रविशत्यरिष्टर्षभः। )

अरिष्टर्षभः– एष भोः,

शृङ्गाग्रकोटिकिरणैः खमिवालिखंश्च
शत्रोर्वधार्थमुपगस्य वृषस्य रूपम्।
वृन्दावने सललितं प्रतिगर्जमान-
माक्रम्य शत्रुमहमद्य सुखं चरामि ॥५॥

हुङ्कारशब्देन ममेह घोषे स्रवन्ति गर्भा वनिताजनस्य।
खुराग्रपातैर्लिखिताधचन्द्रा प्रकम्पते सद्रुमकानना भूः ॥६॥
क्व नु खलु गतो नन्दगोपपुत्रः। भो नन्दगोपपुत्र ! क्वासि।

दामोदरः– भो गोवृषाधम ! इत इतः। एष स्थितोऽस्मि।

अरिष्टर्षभः– (दृष्ट्वा) अहो,

सारवान् खल्वयं बालो यो मां दृष्ट्वा महाबलम् ।
उग्ररूपं महानादं नैव भीतो न विस्मित ॥ ७ ॥

दामोदरः–

किमेतद् भो ! भयं नाम भवतोऽद्य मया श्रुतम् ।
भीतानामभयं दातुं समुत्पन्नो महीतले ॥ ८ ॥

अरिष्टर्षभः– भो ! बालस्त्वम् । अतः खलु भयं न जानासि ।

दामोदरः– भो गोवृषाधम ! किं बाल इति मां प्रधर्षयसि ।

किं दष्टः कृष्णसर्पेण बालेन न निहन्यते ।
बालेन हि पुरा क्रौञ्चः स्कन्देन निधनं गतः ॥ ९ ॥

भवितव्यम् ।

अपीदं शृणु मूर्ख ! त्वं कठिनोपलसञ्चयः ।
किं न पल्लवमात्रेण शैलो वज्रेण पातितः ॥ १० ॥

अरिष्टर्षभः– भो नन्दगोपपुत्र ! किं व्यवसितम् ।

दामोदरः– त्वां निधनमुपनेतुम् ।

अरिष्टर्षभ– समर्थो भवान् ।

दामोदरः– कः संशयः ।

अरिष्टर्षभः– तेन हि गृह्यतां स्वजातिसदृशं प्रहरणम् ।

दामोदरः– प्रहरणमिति । हं भोः !

गिरितटकठिनांसावेव बाहू ममैतौ
प्रहरणमपरं तु त्वादृशां दुर्बलानाम् ।
अथ मम भुजदण्डैः पीड्यमानश्च शीघ्रं
यदि न पतसि भूमौ नास्मि दामोदरोऽहम् ॥ ११ ॥

अरिष्टर्षभः – तेन हि प्रवर्ततां युद्धम् ।

दामोदरः – भो गोवृषाधम ! यदि ते शक्तिरस्ति, मां पादेनैकेन स्थितं स्थानात् कम्पय ।

अरिष्टर्षभः – कोऽत्र संशयः ( तथा कर्तुं चेष्टयित्वा मूर्च्छितः पतति । )

दामोदर – भो गोवृष ! समाश्वसिहि समाश्वसिहि । अनेन वीर्येण भवान् गर्वितः ।

अरिष्टर्षभ – ( आश्वस्य, आत्मगतम् ) अहो दुष्प्रसह्योऽयं बालः ।

रुद्रो वाऽयं भवेच्छक्रो विष्णुर्वापि स्वयं भवेत् ।
अमिथ्या खलु मे तर्कः स एव पुरुषोत्तमः ॥ १२ ॥

आ,

यत्र यत्र वयं जातास्तत्र तत्र त्रिलोकधृत् ।
दानवानां वधार्थाय वर्तते मधुसूदनः ॥ १३ ॥

भवतु । विष्णुना हतस्याप्यक्षयो लोको मे भविष्यति । तस्माद् युद्धं करिष्यामि । ( प्रकाशम् ) भो नन्दगोपपुत्र ! पुनरपि जातो मे दर्पः ।

दामोदर – हम् । तिष्ठ तिष्ठेदानीम् ।

किं गर्जसे भुजगतो मम गोवृषेन्द्र !
पातप्रवृद्ध इव वार्षिककालमेघः ।
एहि क्षिपामि धरणीतलमभ्युपेहि
वज्राहतस्तट इवाञ्जनपर्वतस्य ॥ १४ ॥

( तथा कृत्वा ) एष एष दुरात्मारिष्टर्षभः ।

विसृतरुधिरधाराक्लिन्ननासास्यनेत्रं
चलितककुदबालः प्रस्फुरत्पादकर्णः ।
निपतति विगतात्मा भूतले वज्रभिन्नो
गिरिरिव शिखराग्रैर्गोवृषो दानवेन्द्रः ॥ १५ ॥

( प्रविश्य )

दामकः – जयतु भर्ता । एष भर्ता संकर्षण पर्वताद् यमुनाह्रदे कालियो नाम महानाग उत्थित इति श्रुत्वा तं प्रति गतः । वारय वारय भर्तः ! संकर्षणम् ।

दामोदरः – कालियो नाम मयापि श्रूयते सदर्पः पन्नगपतिः । भवत्वहमस्य दर्पप्रशमनं करोमि ।

गोब्राह्मणादयस्तेन सुजूष्यन्ते किल प्रजाः ।
अद्यप्रभृति शान्तात्मा निष्प्रभः स भविष्यति ॥ १६ ॥

( निष्क्रान्तौ । )

## इति तृतीयोऽङ्कः ।

# अथ चतुर्थोऽङ्क :।

( ततः प्रविशति दामोदरः । )

दामोदरः–

एता मत्तचकोरशावनयनाः प्रोद्भिन्नकन्रस्तनाः
कान्ताः प्रस्फुरिताधरोष्ठरुचयो विस्रस्तकेशस्रजः ।
सम्भ्रान्ता गलितोत्तरीयवसनास्त्रासाकुलव्याहृता-
स्त्रस्ता मामनुयान्ति पन्नगपतिं दृष्ट्वैव गोपाङ्गनाः ॥ १ ॥

( ततः प्रविशन्ति गोपकन्यकाः । )

सर्वाः– मा खलु मा खलु भर्तः ! एतं जलाशयं प्रवेष्टुम् । एष खलु दुष्टमहोरगकुलावासः ।

दामोदरः– न खलु न खलु विषादः कार्यः । पश्यन्तु भवत्यः ।

निष्पक्षिव्यालयूथं भयचकितकरिव्रातविप्रेक्षिताम्भो-
गम्भीरं स्निग्धनीरं ह्रदमुदधिनिभं क्षोभयन् सम्प्रविश्य ।
गोपीभिः शङ्किताभिः प्रियहितवचनैः पेशलैर्वार्यमाणः
कालिन्दीवासरक्तं भुजगमतिबलं कालियं धर्षयामि ॥ २ ॥

सर्वाः – भर्तः । संकर्षण ! वारय वारय भर्तृदामोदरम् ।

( प्रविश्य )

सङ्कर्षणः– अलमलं भयविषादाभ्याम् । दर्शितोऽनुरागः । पश्यन्तु भवत्यः ।

विषदहनशिखाभिर्यन्मुखात् प्रोद्गताभिः
कपिशितमशिवाभिश्चक्रवालं दिशानाम् ।
सरभसमभियान्तं कृष्णमालक्ष्य शङ्की
नमयति शिरसान्तर्मण्डलं चण्डनागः ॥ ३ ॥

सर्वाः– हं भर्तृदामोदरोऽपि तादृश एव।

दामोदरः– सर्वप्रजाहितार्थं द्रुततरं नागं मे वशं करोमि। (इति र्हदं प्रविष्टः।)

सर्वाः– हा हा धूम उत्थितः।

दामोदरः– अहो र्हदस्य गाम्भीर्यम्। इह हि,

सितेतराभुग्नदुकूलकान्तिं द्रुतेन्द्रनीलप्रतिमानवीचिम्।
इमामहं कालियधूमधूम्रां सान्तर्विषाग्निं यमुनां करोमि ॥ ४॥

(निष्क्रान्तः।)

(ततः प्रविशति वृद्धगोपालकः।)

हा भर्तः! एष कन्यकाभिर्वार्यमाणो यमुनार्हदं प्रविष्टः। मा खलु मा खलु साहसं कृत्वा प्रवेष्टुम्। अत्र व्याघ्रा वराहा हस्तिनः पानीयं पीत्वा तत्र तत्रैव विम्रियन्ते। कथं न दृश्यते। किमिदानीं करोमि। भवतु, इमं तावत् कुम्भपलाशमारुह्य निध्यायामि (आरुह्यावलोक्य) हा हा धूम उत्थितः।

सङ्कर्षण– पश्यन्तु भवत्यः।

दामोदरोऽयं परिगृह्य नागं विक्षोभ्य तोयं च समूलमस्य।
भोगे स्थितो नीलभुजङ्गमस्य मेघे स्थितः शक्र इवावभाति ॥ ५॥

वृद्धगोपालकः– ही ही साधुः भर्तः! साधु।

(ततः प्रविशति कालियं गृहीत्वा दामोदरः।)

दामोदरः– एष भोः।

निर्भर्त्स्य कालियमहं परिविस्फुरन्तं
मूर्धाञ्चितैकचरणश्चलबाहुकेतुः।
भोगे विषोल्बणफणस्य महोरगस्य
हल्लीसकं सललितं रुचिरं वहामि ॥ ६॥

सर्वाः– आश्चर्यं भर्तः! आश्चर्यम्। कालियस्य पञ्च फणानाक्रामन हल्लीसकं प्रक्रीडति।

दामोदरः– यावदहमपि पुष्पाण्यवचिनोमि ।

कालियः– आः,

लोकालोकमहीधरेण भुवनाभोगं यथा मन्दरं
शैलं शर्वधनुर्गुणेन फणिना यद्वच्च यादोनिधौ ।
स्थूलाखण्डलहस्तिहस्तकठिनो भोगेन संवेष्टितं
त्वामेव त्रिदशाधिवासमधुना सम्प्रेषयामि क्षणात् ॥ ७ ॥

वृद्धगोपालकः– हा हा भर्तः ! एष भर्तृदामोदरः पुष्पानुकाराभ्यां पदाभ्यामाकारवन्तमिव यमुनाह्रदं महानागं पातेन परिघट्टयन् पुष्पाण्यवचिनोति । (अवतीर्य) साधु भर्तः ! साधु । फालय फालय । अहमपि सहायो भवामि । अहो बिभेमि भर्तः ! बिभेमि । यावदिमं वृत्तान्तं नन्दगोपाय निवेदयामि । ( निष्क्रान्तः । )

दामोदरः–

विध्वस्तमीनमकराद् यमुनाह्रदान्ताद्
दर्पोच्छ्रयेण महता दृढमुच्छ्वसन्तम् ।
आशीविषं कलुषमायतवृत्तभोग-
मेष प्रसह्य सहसा भुवि विक्षिपामि ॥ ८ ॥

कालियः– एष भोः !

रोषेण धूमायति यस्य देहस्तेनैव दाहं पृथिवी प्रयाति ।
ज्वालावलीभिः प्रदहामि सोऽहं रक्षन्तु लोकाः समरुद्गणास्त्वाम् ॥ ९ ॥

दामोदरः– कालिय ! यदि ते शक्तिरस्ति, दह्यतां ममैको भुजः ।

कालियः– हहह,

चतुःसागरपर्यन्तां ससप्तकुलपर्वताम् ।
दहेयं पृथिवीं कृत्स्नां किं भुजं न दहामि ते ॥ १० ॥

हं, तिष्ठेदानीम् । एष त्वां भस्मीकरोमि । (विषाग्निं मुञ्चति ।)

दामोदरः– हन्त दर्शितं ते वीर्यम् ।

कालियः– प्रसीदतु प्रसीदतु भगवान् नारायणः ।

दामोदरः– अनेन वीर्येण भवान् गर्वितः ।

कालियः- प्रसीदतु भगवान् ।

गोवर्द्धनोद्धरणमप्रतिमप्रभावं
बाहुं सुरेश ! तव मन्दरतुल्यसारम्
का शक्तिरस्ति मम दग्धुमिमं सुवीर्यं
यं संश्रितास्त्रिभुवनेश्वर ! सर्वलोकाः ॥११॥

भगवन् ! अज्ञानादतिक्रान्तवान्, सान्तःपुरः शरणागतोऽस्मि ।

दामोदरः – कालिय ! किमर्थमिदानीं यमुनाह्रदं प्रविष्टोऽसि ।

कालियः – भगवतो वरवाहनाद् गरुडाद् भीतोऽहमिह प्रविष्टोऽस्मि । तदिच्छामि गरुडादभयं भगवत्प्रसादात् ।

दामोदरः – भवतु भवतु ।

मम पादेन नागेन्द्र ! चिह्नितं तव मूर्धनि ।
सुपर्ण एव दृष्ट्वेदमभयं ते प्रदास्यति ॥ १२ ॥

कालियः- अनुगृहीतोऽस्मि ।

दामोदरः- प्रविशतु भवान् ।

कालियः- यदाज्ञापयति भगवान् नारायणः ।

दामोदरः- अथवा एहि तावत् ।

कालियः- भगवन् ! अयमस्मि ।

दामोदरः- अद्यप्रभृति गोब्राह्मणपुरोगासु सर्वप्रजास्वप्रमादः कर्तव्यः ।

कालियः- भगवन् ! मद्विषदूषितमिदं जलम् । तदिदानीमेव विषं संहृत्य यमुनाह्रदान्निष्क्रामामि ।

दामोदरः- प्रतिनिवर्ततां भवान् ।

कालियः- यदाज्ञापयति भगवान् नारायणः । (सपरिजनो निष्क्रान्तः । )

दामोदरः- यावदहमपि ह्रदाद् गृहीतानि पुष्पाणि गोपकन्यकाभ्यः प्रयच्छामि ।

सर्वाः– एष भर्तास्माक हृदयानन्दं कुर्वन् अक्षतशरीर इत एवागच्छति। जयतु भर्ता।

सङ्कर्षण;– दिष्टचा गोब्राह्मणहितं कृतम्।

दामोदरः– गृह्यन्तां पुष्पाणि।

सर्वाः– भर्तः ! एतानि मुनिसङ्घैरनवचितपूर्वाणि पुष्पाणि परामृष्टानि चन्द्रादित्यकिरणैरपरिमर्दितानि। बिभीमो भर्तः !

दामोदरः– पूर्वं दृष्टभया वित्रस्तास्तपस्विन्यः। न भेतव्यं न भेतव्यम्। तदानीं खलु मत्करस्पर्शनात् सौम्यभावमुपगतानि, गृह्यन्ताम्।

सर्वाः– यद् भर्ताज्ञापयति।

( प्रविश्य )

भटः– भो गोपालक ! क्व गतो नन्दगोपपुत्रः।

गोपालकः– एष भर्ता कालियं नाम महानागं परिपीड्य गोपकन्यकाभिः परिवृतः स्थितः।

भटः– (उपगम्य) भो नन्दगोपपुत्र ! अनुगतार्थनामधेयस्य महाराजस्योग्रसेनस्य पुत्रः कंसराजो भवन्तमाज्ञापयति।

दामोदरः– कथमाज्ञापयतीति।

भटः– मधुरायां धनुर्महो नाम महोत्सवो भविष्यति। तमनुभवितुं सपरिजनाभ्यां भवद्भ्यामागन्तव्यमिति।

दामोदरः– आर्य ! अयं ननु देवरहस्यकालः।

सङ्कर्षणः– शीघ्रमिदानीं गमिष्यावः।

दामोदरः- बाढम् । प्रथमः कल्पः । एष भोः ।

प्रभ्रष्टरत्नमुकुटं परिकीर्णकेशं
विच्छिन्नहारपतिताङ्गदलम्बसूत्रम् ।
आ कृष्य कंसमहमद्य दृढं निहन्मि
नागं मृगेन्द्र इव पूर्वकृतावलेपम् ॥ १३ ॥

( निष्क्रान्ताः सर्वे । )

## इति चतुर्थोऽङ्कः ।

## अथ पञ्चमोऽङ्कः ।

( ततः प्रविशति राजा । )

राजा–

श्रुत्वा व्रजे विपुलविक्रमवीर्यसत्त्वं
दामोदरं सह बलेन समाचरन्तम् ।
आदिश्य कार्मुकमहं तमिहोपनीय
मल्लेन रङ्गगतमद्य तु घातयामि ॥ १ ॥

ध्रुवसेन ! ध्रुवसेन !

( प्रविश्य )

भटः– जयतु महाराजः ।

राजा– ध्रुवसेन ! किमागतो नन्दगोपपुत्रः ।

भटः– श्रोतुमर्हति महाराजः । प्रविशन्नेव दामोदरः ससङ्कर्षणो गोपजनपरिवृतो रजकेभ्यो वस्त्राण्याच्छिद्य गृहीतवानिति श्रुत्वा महामात्रेणोत्पलापीडो नाम गन्धहस्ती सञ्चोदितस्तमभिघातयितुम् । ततः,

तमापतन्तं सहसा समीक्ष्य सभीतगोपालकवृन्दमध्ये ।
बालो बलेनाद्रिनिभं गजेन्द्रं दन्तं समाकृष्य जघान शीघ्रम् ॥ २ ॥

राजा– कथं जघानेति । गच्छ । भूयो ज्ञायतां वृत्तान्तः ।

भटः- यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः । एष इदानीं नन्दगोपपुत्र उत्सवाधिकारोच्छ्रितध्वजपताकमवसक्तमाल्यदामालङ्कृतमुत्थापितागुरुधूपसमाकुलं राजमहापथं प्रविश्य राजकुलद्वारे गन्धसमुद्रावसक्तहस्तां मदनिकां नाम कुब्जिकां दृष्ट्वा तस्या हस्ताद् गन्धमादाय स्वगात्रमनुलिप्य तेनैव हस्तेन कुब्जस्यानुमार्जनेन विगतकुब्जभावां तां कृत्वा मालाकारापणेभ्यः पुष्पाण्याहृत्याबध्य धनुः शालाभिमुखो गतः ।

राजा– किन्तु खलु तेन व्यवसितम्। तेन हि शीघ्रं गच्छ। भूयो ज्ञायतां वृत्तान्तः।

भटः – यदाज्ञापयति महाराजः (निष्क्रम्य प्रविश्य) जयतु महाराजः। धनुःशालारक्षकेण सिंहबलेन वार्यमाणस्तं कर्णमूले प्रहृत्य हत्वा धनुः समादाय द्विखण्डं कृत्वा साम्प्रतमुपस्थानाभिमुखो गतः। स हि,

आपीडदामशिखिबर्हविचित्रवेषः
पीताम्बरः सजलतोयदराशिवर्णः।
अभ्येति रोषपरिवृत्तविशालनेत्रो
रामेण सार्धमिह मृत्युरिवावतीर्णः ॥ ३ ॥

राजा– सावेगमिव मे हृदयम्। गच्छ, यथानिर्दिष्टौ चाणूरमुष्टिकौ प्रवेशय, वृष्णिकुमाराणां सन्नाहमाज्ञापय।

भटः– यदाज्ञापयति महाराजः (निष्क्रान्तः।)

राजा– यावदहमपि प्रासादमारुह्य चाणूरमुष्टिकयोर्युद्धं पश्यामि। (आरुह्य) मधुरिके! विघाटयतां द्वारम्।

प्रतिहारी– यद् भर्ताज्ञापयति।

(राजा प्रविश्योपविशति।)

(ततः प्रविशतश्चाणूरमुष्टिकौ।)

चाणूरः-

एषोऽस्मि युद्धसज्जो मत्तो हस्तीव दर्पसंपूर्णः।
भनज्म्यद्य बालं दामोदरं रङ्गमध्ये ॥ ४ ॥

मुष्टिकः– लोहमयमुष्टिहस्तो नाम्ना च मुष्टिको रुष्टः।
पातयाम्यद्य रामं गिरिवरकूटं यथा वज्रो ॥ ५ ॥

भटः- एष महाराजः। उपसर्पतां भवन्तौ!

उभौ- (उपेत्य) जयतु भर्ता।

राजा- चाणूरमुष्टिकौ ! सर्वप्रयत्नेन युवाभ्यामानृण्यं कर्तव्यम् ।

उभौ- शृणोतु भर्ता । करणसन्धाबन्धप्रहारैर्युध्दविशेषैः सिध्दि गच्छामः । हं पश्यतु भर्ता ।

राजा- बाढमेवं क्रियताम् । ध्रुवसेन! प्रवेश्येतां गोपदारकौ ।

भटः- यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

( ततः प्रविशतो दामोदरसङ्कर्षणौ ध्रुवसेनेन सह । )

दामोदर- आर्य !

मर्त्येषु जन्म विफलं मम तानि घोषे
कर्माणि चाद्य नगरे धृतये न तावत् ।
यावन्न कंसहतकं युधि पातयित्वा
जन्मान्तरासुरमहं परिकर्षयामि ॥ ६ ॥

सङ्कर्षणः-

प्रविश्य रङ्गं कृतलोहमुष्टिं तं मुष्टिना मुष्टिकमद्य रुष्टम् ।
हत्वा चरिष्याम्यनिलप्रचण्डः प्रलम्बमम्भोदमिवान्तरिक्षे ॥ ७ ॥

भटः- एष महाराजः । उपसर्पेतां भवन्तौ ।

उभौ- आः कस्य महाराजः ।

भटः- सर्वस्य जगतोऽस्माकं च ।

दामोदरः- अद्यप्रभृति न भविष्यति ।

भटः- जयतु महाराजः ! एतौ तौ ।

राजा- (विलोक्य) अयं स दामोदरः । अहो,

श्रीमान् मदान्धगजधीरविलासगामी
श्यामः स्थिरांसभुजपीनविकृष्टवक्षाः ।
पूर्वं श्रुतानि चरितानि न चित्रमस्य
लोकत्रयं हि परिवर्तयितुं समर्थः ॥ ८ ॥

अयं नु ललितगम्भीराकृतिः पूर्वजोऽस्य राम इति श्रूयते ।

अभिनवकमलामलायताक्षः शशिनिभमूर्तिरुदारनीलवासाः ।
रजतपरिघवृत्तदीर्घबाहुश्चलदसितोत्पलपत्रचित्रमालः ॥ ९ ॥

दामोदरः- आर्य ! एतावेवावाभ्यां युद्धसन्नद्धाविति मन्ये ।

सङ्कर्षणः- भवितव्यम् ।

राजा- ध्रुवसेन ! प्रवर्ततां युद्धम् ।

भटः- यदाज्ञापयति महाराजः ( मालां क्षिपति । )

मल्लौ- हं हो, वादयत वादयत सङ्ख्यापटहान् ।

चाणूरः- एहि दामोदर ! अद्य मे भुजयुगलेन सिद्धिं गच्छ ।

दामोदरः-

प्राप्तोऽस्मि तिष्ठ मम वेगमिमं सहस्व

मुष्टिकः- ए ए राम ! अद्य मे मुष्टिपिष्टगात्रगलितरुधिरपटलमज्जो जीवितमुज्झसि ।

सङ्कर्षणः-

त्वामद्य मुष्टिक ! यमाय निवेदयामि ।

( सर्वे नियुद्धं कुर्वन्ति । )

दामोदरः – ( चाणूरं निहत्य )

भग्नास्थिरेष निहतो

सङ्कर्षणः-

निहतो मयापि

दामोदरः –

कंसासुरं च यमलोकमहं नयामि ॥ १० ॥

(प्रासादमारुह्य कंसं शिरसि निगृह्य पातयित्वा) एष एष दुरात्मा कंसः.

विस्तीर्णलोहितमुखः परिवृत्तनेत्रो
भग्नांसकण्ठकटिजानुकरोरुजङ्घः ।
विच्छिन्नहारपतिताङ्गदलम्बसूत्रो
वज्रप्रभग्नशिखरः पतितो यथाद्रिः ॥ ११ ॥

( नेपथ्ये )

हा हा महाराजः ।

( पुनर्नेपथ्ये )

भो भो वृष्णियोधाः ! अनावृष्टिशिवकहृदिकपृथुकसोमदत्ताक्रूरप्रमुखाः ! अयं खलु भर्तृपिण्डनिष्क्रयस्य कालः । शीघ्रमागच्छन्तु भवन्तः ।

दामोदरः– आर्य ! संवार्यतां सैन्यम् ।

सङ्कर्षणः– अयमहं वारयामि ।

द्रुततुरगरथेभभ्रान्तयोधोग्रनादं
विलसदमलखड्गप्रासशक्त्यष्टिकुन्तम् ।
पवनबलविकीर्णं फेनजालोर्मिमालं
जलनिधिमिव दोर्भ्यां क्षोभयाम्येष सैन्यम् ॥ १२ ॥

( ततः प्रविशति वसुदेवः । )

वसुदेवः– भो भो मधुरावसिनः ! अलमलं साहसेन ।
ज्येष्ठोऽयं मम तनयस्तु रौहिणेयो
देवक्यास्तनयमिमं च किं न वित्थ ।
सन्नाहं त्यजत किमायुधैश्च कार्यं
कंसार्थं स्वयमिह विष्णुराजगाम ॥ १३ ॥

सङ्कर्षणः– (विलोक्य) अये तातः । तात ! सङ्कर्षणोऽहमभिवादये ।

दामोदरः- तात ! दामोदरोऽहमभिवादये ।

वसुदेवः– अक्षयविजयिनौ भवेतां भवन्तौ । सत्पुत्रजन्मफलमद्य प्राप्तवानस्मि

उभौ– अनुगृहीतौ स्वः ।

वसुदेवः– कोऽत्र ?

(प्रविश्य)

भटः– जयत्वार्यपुत्रः ।

वसुदेवः- अपविध्यन्तां कलेवराणि ।

भटः– यदाज्ञापयत्यार्यपुत्रः ।

गोपालकाः सर्वे- ही ही गोपालकानां राज्यं संवृत्तम् ।

वसुदेवः- कोऽत्र ?

भटः– जयत्वार्यपुत्र : ।

वसुदेवः– गच्छ, शीघ्रं दामोदरस्यादेशादनावृष्टिमाज्ञापय, महाराजमुग्रसेनमपनीय निगलान्निर्वृत्ताभिषेकं कृत्वा प्रवेशयेति ।

भटः– यदाज्ञापयत्यार्यपुत्रः । ( निष्क्रान्तः । )

वसुदेवः– अये,

नदन्ति सुरतूर्याणि वृष्टिः पतति कौसुमी ।
कंसान्तकस्य पूजार्थं प्रायो देवाः समागताः ॥ १४ ॥

(नेपथ्ये)

श्रीमानिमां कनकचित्रितहर्म्यमालां
विस्तीर्णराजभवनापणगोपुराट्टाम् ।
पायात् सदैव मधुरां कमलायताक्ष-
स्त्रैलोक्यजित् सुरवरस्त्रिदशेन्द्रनाथः ॥ १५ ॥

वसुदेवः– भो भो मधुरावासिनः ! शृण्वन्तु शृण्वन्तु भवन्तः । अस्य खलु दैत्येन्द्रपुरार्गलोत्पाटनपटोः सर्वक्षत्रपराङ्मुखावलोकिनो वसुदेवसम्भवस्य वासुदेवस्य प्रसादात् पुनरधिगतराज्यस्योग्रसेनस्य शासनमिदानीमवघुष्यते ।

सर्वे– प्रतिष्ठितमिदानीं वृष्णिराज्यम् ।

वसुदेवः- प्रवेश्यतां महाराजः ।

भटः– यदाज्ञापयत्यार्यपुत्रः । (निष्क्रान्तः । )

(ततः प्रविशत्युग्रसेनः । )

उग्रसेनः–

चिरोपरोधसम्प्राप्तः क्लेशो मे केशिसूदनात् ।
अपनीतः स्ववीर्येण यथा विष्णोः शतक्रतोः ॥१६॥

भगवत्प्रसादाद् व्यसनार्णवादुत्तारितोऽस्मि ।

( ततः प्रविशति नारदः । )

नारदः-

कंसे प्रमथिते विष्णोः पूजार्थं देवशासनात् ।
सगन्धर्वाप्सरोभिश्च देवलोकादिहागतः ॥ १७ ॥

दामोदरः- अये देवर्षिर्नारदः । देवर्षे ! स्वागतम् । इदमर्घ्यं पाद्यं च ।

नारदः- सर्वं गृह्णामि ! गन्धर्वाप्सरसो गायन्ति ।
नारायण ! नमस्तेऽस्तु प्रणमन्ति च देवताः ।
अनेनासुरनाशेन मही च परिरक्षिता ॥ १८ ॥

दामोदरः- देवर्षे ! परितुष्टोऽस्मि । किं ते भूयः प्रियमुपहरामि ।

नारदः-

प्रहृष्टो यदि मे विष्णुः सफलो मे परिश्रमः ।
गमिष्ये विबुधावासं सह सर्वैः सुरोत्तमैः ॥ १९ ॥

दामोदरः- गच्छतु भवान् पुनर्दर्शनाय ।

नारदः- यदाज्ञापयति भगवान् नारायणः । (निष्क्रान्तः । )

(भरतवाक्यम्)

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥ २० ॥

( निष्क्रान्ताः सर्वे: )

## इति पञ्चमोऽङ्कः ।

## अवसित बालचरितम् ।

# बालचरित

## टीपा

### अंक पहिला

श्लोक - १ त्रिवंद्रम नाटकांच्या रचनेची वैशिष्टये लक्षात घेता, आरंभीचा हा श्लोक नांदी म्हणून, किंवा 'साहित्यदर्पण'काराने सूचविल्या-प्रमाणे मूळ पूर्वरंगातील नांदीनंतरच्या 'रंगद्वार' या अंगाचा देवतास्तुतिविषयक श्लोक म्हणून म्हटला पाहिजे. 'नान्द्यन्ते ततः प्रविशति ...'या सूचनेप्रमाणे, पारंपरिक नांदी म्हणून झाल्यावर नाटककाराने स्वतःचे ईशस्तवन करण्याच्या हेतूने दुसरी नांदी म्हणून हा स्वतःचा श्लोक रचला, असेही म्हणता येईल.

श्लोकातील अवताराचे वर्णन केवळ युगांच्या संदर्भात आहे. नारायण, विष्णु, राम आणि दामोदर यांचे अवतार– ऐक्य दाखवून श्रीकृष्ण हा दैवी, अवतार असल्याची सूचना प्रथमपासूनच दिली आहे. नाटकात हे दैवी, अद्‌भताचे रंग आहेतच. श्लोक २ मध्ये हे आणखी स्पष्ट झाले आहे.

स्थापना – त्रिवंद्रम नाटकांतील हा सूत्रधार–प्रवेश 'प्रस्तावना'म्हणून ओळखला न जाता 'स्थापना' म्हणून म्हटला जातो. पुढील नाट्यशास्त्र–लेखकांनी दोन्ही एकच असल्याचे म्हटले असले तरी, 'स्थापना' नावाचा संबंध भरताच्या मूळ पूर्वरंगाशी आहे. पूर्वरंगाची प्रेक्षकां–पुढे सादर करावयाची नऊ अंगे केल्यावर सूत्रधार आत जातो; मग त्याच्याच सारखी गुणवत्ता आणि क्षमता असलेल्या दुसऱ्या, 'स्थापक'नामक नटाने रंगमंचावर येऊन नाटक, नाटककार यांची ओळख करून देऊन, नाट्यारंभाची सूचना द्यावयाची. आधीची ही नाटके 'स्थापककृतारम्भ' असत; भासाने ही पद्धती बदलून पूर्वरंगाची अंगे आणि नाटक-नाटककाराचा प्रस्ताव ही सर्व कामगिरी एकट्या सूत्रधाराकडूनच पार पाडण्याचा प्रघात पाडला. म्हणूनच येथून पुढे संस्कृत नाटके 'सूत्रधारकृतारम्भ' झाली आणि त्याचे

श्रेय भासाचे होय, असे बाणभट्टाने स्वानुभवाने नोंदून ठेवले. (माझ्या Bhasa Studies या पुस्तकातील 'Bāna's Tribute to Bhāsa' हा लेख संपूर्ण विवेचनासाठी पहावा.)

ही त्रिवंद्रम नाटके पर्व-अभिजात कालातली आहेत. त्या वेळी पूर्वरंगाची उत्क्रांति होऊन, प्रस्ताव–नाट्यारंभ यांचे स्वरूप ठरत होते. काही अंगे जुन्या, काही नव्या पद्धतीने सादर होत असावीत. नाटक आणि नाटककार यांचा परिचय जुन्या पद्धतीने होत असावा. म्हणून या नाटकांच्या ' स्थापना-' दृश्यात नाटकाचे-नाटककाराचे नाव येत नाही, केवळ ठराविक पद्धतीने (' मयि विज्ञापनव्यग्र शब्द इव श्रूयते…… ') नाट्यारंभाची सूचना तेवढी आलेली दिसते.

नारदाचा असा प्रवेश ' अविमारक ' नाटकाच्या पण आरंभी व शेवटी आहे. नारदाच्या कलहप्रियतेची सूचना तेथेही आहे.

**श्लोक १०-** ' अ–गणितपरिखेदा ' हे स्वतंत्र घेणे इष्ट - मग 'षण्णां सुतानां अपचय- (ध्वंस, विनाश, मृत्यू)- गमनार्थं ' चा ' सप्तमं रक्षमाणा '–शी संबंध जुळून नीट अर्थ लागतो. अनुवाद त्याप्रमाणे आहे. तसे ' षण्णां सुतानां ' दोन्हीकडे घेता येईलही. कृष्णाला देवकीचा सातवा पुत्र गणले आहे, हे लक्षणीय. पुढे मथुरेला पण ' मधुरा ' संबोधले आहे.

**प्रविश त्वं अभ्यन्तरम् ।** हे वाक्य आणि पुढील ' एषा गच्छामि मन्दभागा ' ' स्वप्नवासवदत्त ' नाटकातही येतात. अभ्यन्तर म्हणजे अन्तर्गृह अंत:पुर, हा अर्थ प्रत्येक वेळी अभिप्रेत असतोच असे नाही. नाटकीय दृष्टीने ही पात्रनिर्गमाची (exit) सूचना पण असते.

**श्लोक १५** - ' लिम्पतीव तमोऽङ्गानि ' हा श्लोक ' चारुदत्त ' (१·१९) नाटकातही आहे. ' मृच्छकटिक ' मध्ये तो आहेच.

**अहं अस्य दर्पप्रशमनं करोमि** – हे उद्गार पुढे दामोदराच्या भाषणांतही येतात.

**श्लोक १८** - इमां नदीं ...भुजप्लवेन ' अशी रचना; ' तरिष्ये ' असे क्रियापद अध्याहृत घ्यावे; किंवा ' वहामि ' नदी आणि सिद्धि दोन्हीकडे घ्यावे. **गतार्थविक्लवा** हे मध्येच आलेले पद दिसते; विक्लव म्हणजे क्लेश, कष्ट; भीति, घबराट असाही अर्थ दिसतो. हे स्वतंत्र

पद घेऊन अनुवाद केला आहे. किंवा अगदी शेवटी घेऊन (नदी पार केल्यावर, देवांनी यश दिल्यावर), 'माझे क्लेश - कष्ट - सार्थकी लागतील' असाही अर्थ करता येईल.

**अस्मत्सब्रह्मचारी–** 'आपली-दुःखांत सहभागी असणारा' (एका गुरूच्या हाताखाली आश्रमात शिकणारे विद्यार्थी (ब्रह्मचारी) जसे एकमेकांच्या सुख-दुःखांचे सारखेच वाटेकरी, तसा).

**तपस्वी–** 'तपस्वी, तपस्विनी' या शब्दांचा तपाशी संबंध नसला म्हणजे 'गरीब बिचारा (री)' असा अर्थ.

**प्रतिभय (रजन्याम्)**- भयानक, थरकाप उडविणाऱ्या (रात्री).

**प्राणैःशापितः**- 'माझ्या प्राणांची शपथ आहे'– हा वाक्प्रचार 'अभिषेक' नाटकात बिभीषणाशी बोलताना (३.२३.[१६]) रावणाच्या तोंडी आला आहे.

**उक्तज्ञा खलु नृशंसाः**- वुलनर-सरूप यांचे भाषांतर, 'Remorseless men know what to say' सीताराम सहगल यानी, 'क्रूर लोग अनिष्ट बात को समझ जाया करते हैं' असा हिंदी अनुवाद केला आहे. मी थोड्या वेगळ्या प्रकारे अनुवाद केला आहे. नंदगोपाची भीति खरी आहे आणि कंसासारख्या नृशंसाला बोललेले (उक्त) म्हणजे नंदगोप–वसुदेवाचे हे संभाषण हेर किंवा मतलबी लोकांकडून कळल्याशिवाय राहणार नाही, हेही खरे. म्हणून ठेव (न्यास) ठेवण्याची भाषा न करता, वसुदेव केलेल्या उपकाराचे स्मरण देऊन त्याची परतफेड मागतो. कंसाला हे समजले तरी 'उपकाराची फेड' एवढाच त्याचा आशय राहील.

**युगप्रमाणा (सलिलधारा)** - इथे 'युग' चा अर्थ 'दोन' (किंवा चार युगे म्हणून 'चार').

**भाण्ड (शकट)**- 'भाण्ड' म्हणजे मोलाच्या वस्तू; मग काहीही किंमती माल.

**पञ्चायुधानि** - सुदर्शनचक्र, शार्ङ्ग धनुष्य, कौमोदकी गदा, शंख, नंदक खड्ग (तलवार) या आयुधांचा आणि वाहन गरुड यांचा मूर्त - मानुष - रूपात प्रवेश 'दूतवाक्य' नाटकातही अभिप्रेत आहे.

**आत्मना एव आत्मानं निर्वाहय** – वुल्नर - सरूप यांनी इथे पाठ सुधारून,

'Do thou make thyself much lighter, as easy to carry as hay' असे भाषांतर केले आहे.

श्लोक २८ – 'लघुत्वयोगात्' –हलकेपणा स्वीकारून, वजनाला हलके होऊन. हे मंदर – सदृश बाळ, नंदगोपाची वरील प्रार्थना यांशी जुळते. सहगल यांनी लघुत्व नदाकडे घेऊन 'आप इस व्यक्ति के छोटे से कार्य से प्रसन्न हों।' असे केलेले भाषांतर संदर्भात योग्य वाटत नाही.

महद् भूतम् – 'महा भूत' म्हणजे दिव्य व्यक्ति; साधा अर्थ, आश्चर्य, अद्भुत. 'कुमारात् किञ्चिद् अन्तरम्' चा अर्थ 'कुमाराहून थोडेसेच कमी किंवा वेगळे (पण तसेच दिव्य)' असा दिसतो. आणि तो बरोबर असावा कारण दुसऱ्या अंकात याच मुलीचा वर गेलेला अंश कात्यायनीच्या रूपाने प्रकट होतो.

ज्येष्ठाश्रितम्- कंसगृहाला हे विशेषण लावताना 'श्रियारूढम्' शी त्याचा विरोध सहज दिसतो. 'ज्येष्ठा' ही लक्ष्मीची मोठी बहीण, दुर्भाग्याची देवता. (पाहा, आपटे–संस्कृत कोश).

# अंक २ रा

अस्माकं कन्यानाम्– चांडालकन्या, शाप, राज्यलक्ष्मी यांची संभाषणे हे वस्तुतः कंसाला पडलेले स्वप्न आहे. मनाच्या अन्तःपातळीवरील स्वप्न–दृश्याला जाणिवेच्या पातळीवर असे मूर्त रूप देण्याची नाटककाराची कला केवळ असाधारण आहे.

श्लोक १ - 'अग्रहर्म्याः-' अग्र विशेषण घेतल्यास, 'श्रेष्ठ, भव्य प्रासाद.' 'हर्म्याग्र' अभिप्रेत असल्यास, 'प्रासादांची शिखरे.'
'सन्तारनौः – (सम्+तॄ) उत्तमप्रकारे, सुखरूप प्रवाहपार नेणारी नौका.

'निमित्त' – शकुन (Omens)- निमित्तांचा संबंध त्यांच्या प्रमुख गुणांशी आणि मनुष्यकृत कर्माच्या अपरिहार्य परिणामांशी आहे अशी श्रद्धा आहे. म्हणून शकुनांची फले भोगणे (सेव्य) प्राप्त आहे.

सृष्टाः – ' धृष्टाः -' धीट, असे अभिप्रेत दिसते.

श्लोक ६ – कन्दर-दऱ्या; कूटकुञ्ज - कुंजासारखी घनदाट शिखरे; किंवा कूट-शिखरे, कुंज–वृक्षवेलींचा समूह. सौवर्ण आणि कान्ततर ही विशेषणे वेगवेगळी घ्यावीत असे वाटते. प्रचलित कल्पनेप्रमाणे मेरु पर्वताची शिखरे सुवर्णाची आहेत. ' हास्यो ऽसि '– असा शब्दप्रयोग ' अभिषेक ' नाटकातही आहे. सीता रावणाला ' हास्यः ' म्हणते.

नयनव्याक्षेपम् – डोळे मिटून विश्रांती.

श्लोक ८– **बलवान् गुणसंग्राह-** वुल्नर सरूप, ' ever- grasping his bow' असे भाषांतर करतात; पण गुण – धनुष्याची दोरी हा अर्थ इथे अप्रस्तुत आहे. सहगल यांचा अनुवाद ' गुणों में लगावट बलवान है ' स्वतंत्र वाक्य घेऊन झाला आहे; त्यामुळे ' दृढं तपति ...' या वाक्याला त्याग हा कर्ता अध्याहृत घ्यावा लागला आहे. ' गुणसंग्राह ' हाच कर्ता दिसतो; **संग्राह** (सम्यक् ग्राहयति) म्हणजे ' घट्ट पकडायला लावणारा'; एखाद्याचे गुण आपल्याला घट्ट पकडून ठेवतात. गुणांची ही ओढ, लागण फार ताकदीची (बलवान) असते. कंस दुष्ट असला तरी त्याचेही गुण आहेत; त्यांची ओढ बळकट आहे; म्हणून राजलक्ष्मीला त्याला सोडून जाववत नाही, हा आशय.

**श्लोक १०**– ' नित्यं भूतं '- सनातन भूततत्त्व; त्यांचा निवास आकाश–मंडलातच (अदृश्य रूपाने) असतो. परंतु काही विशेष कार्यासाठी ही भूततत्त्वे पृथ्वीवर अवतीर्ण होतात. तो प्रसंग दिव्य शकुनांनी सूचित होतो. हा धार्मिक श्रध्देचाच भाग होय.

**शौरसेनीमातः**– शौरसेनी माता यस्य सः, तत्संबुध्दौ । मातेच्या नावावरून हाक मारण्याची, व्यक्तिनिर्देश करण्याची त्रिवंद्रम नाटकांतली ही पध्दती लक्षणीय आहे.

**प्रसूतवती किल**– ' किल ' चा ' खरोखर ' असा केवळ अव्ययवाचक अर्थ अभिप्रेत नसून ' असे म्हणतात असे ऐकले ' असा विशिष्ट वाक्प्रचाराचा अर्थ इथे घेतला पाहिजे. ' स्वप्नवासवदत्त ' नाटकातही असा वाक्प्रचार आहे: ' समुद्रगृहके किल शय्या आस्तीर्णा ' (अंक ५).

**सुखं प्रविशतु**- कंसाने ' एवं क्रियताम् ' असे म्हटल्यावर ' कर्णे ' अशी काही

रंगसूचना अपेक्षित होती. परंतु आवश्यक रंगसूचनांचा अभावह् या त्रिवंद्रम नाटकांत बरेच वेळा आढळून येतो. कंसाच्या अस्पष्ट उद्गारामुळे ' सुखं प्रविशतु भर्ता ' या वाक्याचा अर्थही निश्चित कळत नाही. ' सुखं ' हे ' प्रविशतु' चे कर्म मानून लक्षणेने ' स्वस्थ असावे ' असा अनुवाद केला आहे. या कुजबुजीचा संबंध कंसाने देवकीच्या महालात प्रवेश करण्याशी असेल तर ' (देवकी) म्हणतात (किल) की महाराजांनी सुखाने (माझ्या महालात) प्रवेश करावा ', असा या वाक्याचा अर्थ करता येईल. परंतु प्रत्यक्ष दृश्याप्रमाणे कंस देवकीकडे जात नाही, तर मुलीला घेऊन धात्री (दाई) कंसापाशी येते आहे. तेव्हा फार तर, देवकीची काही अडकाठी नाही, एवढेच या वाक्याने सुचवायचे असावे.

विविक्तम् - वि + विच् चे क. भू. धा. वि. भाववाचक नामासारखे (' विवेक ') योजलेले दिसते– (जसे, गतम्-गतिः).

कात्यायनी– कात्यायनी किंवा दुर्गा, शुंभ-निशुंभाचा वध, देवीचे सहचर इ. सर्व बरेच उत्तरकालीन आहेत, त्यांचा वैदिक काळाशी आणि भागवतादि कृष्णविषयक पुराणांशी संबंध नाही, असे मानून सीताराम सहगल हे नाटक भासाचे नाही, फारतर मूळ नाटकाचे रूपांतर होय, असे म्हणतात [बालचरित, संपादित आवृत्ती, मुंशीराम मनोहरलाल, दिल्ली. १९५९; प्रस्तावना पा. ४०–४३]. कात्यायनी - प्रवेशाचा भाग प्रक्षिप्त, काही कारणास्तव मागाहून समाविष्ट केलेला, असे मानले तरी त्यामुळे सर्व नाटकच कसे अनधिकृत, उत्तरकालीन ठरते ?

श्लोक २० - ' वसुदेववशे प्रसूता ' – वस्तुतः मुलगी यशोदेच्या पोटी म्हणजे गोपकुलात जन्माला आली! हा जन्म पण दैवी योजनेनेच झाला, म्हणून, किंवा नाटककाराने दाखविल्याप्रमाणे नंदगोप हा वसुदेवाचा भृत्य, त्याची मुलगी ही धन्याचीच कृपा, अशा समजुतीने ' वसुदेववंशे प्रसूता ' म्हटले असावे.

श्लोक २१ - ' देव्याः प्रसूतिजनित '... समासातील ' प्रसूति ' शब्दाचा अर्थ कळत नाही. बुल्नर–सरूप यांनी ' इच्छा ' असा अर्थ घेतला आहे. सहगल यांचे भाषांतर तसेच आहे: 'देवी की इच्छा पर भयानक नाद करता हूँ; प्रसूति म्हणजे जन्म; तेव्हा संदर्भाप्रमाणे ' अवतार ' असा अर्थ नसेल ! अनुवाद अशा अर्थाने केला आहे. पुढील श्लोकातील शूला-संबंधीचे ' देव्याः प्रसादजनित ... ' हे वर्णन तुलनेसाठी पाहावे.

श्लोक २२- येथे पुन्हा 'भूतम्' अदृश्य तत्त्व, शक्ति हा शब्द आला आहे. 'प्रपन्नः' हे पुल्लिंगी रूप 'भूतं' शी जुळणार नाही, पण 'शूलः' शी जुळते. 'जलनिधेः पादपं तम्' संदर्भ तारकासुराशी आहे, हे कुमारकार्तिकेयाच्या कथेवरून स्पष्ट आहे. तेव्हा 'पादप' चा वाच्यार्थ (वृक्ष) न घेता, '(वृक्षाप्रमाणे) समुद्रात दृढमूल झालेल्या' असा लक्ष्यार्थ घेतला पाहिजे. वुलनर-सरूप(Lit. tree of the ocean Taraka rooted in the ocean' असा अर्थ करतात. 'यथा शक्तिधरः (स्कन्दः, कार्त्तिकेयः) क्रौञ्चं **प्रकृष्टवान्**' असे हवे. प्र+कृष्- जोराने ओढणे, खेचणे. क्रौंच पर्वताच्या संदर्भात आरपार भोक पाडणे, भेद करणे.

**श्लोक २४– नलानां निलयम्**–नल—बांबू, वेळू, निलय—घर, वसतिस्थान. वेळूचे, बांबूचे वन.

# अंक ३ रा

**प्रकालयत** : प्र+कल् (३-दशमगण) प्रयोजक-कालयति ।' पुढे ढकलणे, हाकलणे' हा अर्थ.

**गोवज्जहादो णिक्कमिअ** : 'गोवज्जह' या प्राकृत पदाचा अर्थ कळत नाही. देवधरांनी 'गोत्रजात्' असा पर्याय सुचवला आहे. 'गोवषहजूहादो' गोवृषभयूथात् – असा एक पाठभेद आहे. '(मस्त) बैलांच्या कळपातून बाहेर पडून' असा त्याचा अर्थ होईल.

**मुखे कूर्परो दत्त** : वुलनर–सरूपना 'कूर्पर' (camphor?) चा अर्थ लागला नाही; सहगलनाही (' उसके मुंह मे थूका ') 'कूर्पर' म्हणजे (हाताचा) कोपर, गुडघा, असाही अर्थ आहे.

**हल्लीसक** – नृत्याचा विशेष प्रकार. 'हरिवंश' २.२०.३५ वर टीका लिहिताना नीलकण्ठ सांगतो, 'हल्लीसकक्रीडनं, एकस्य एव पुंसः बहुभिः स्त्रीभिः क्रीडनम् सैव रासक्रीडा ।' परंतु भोजाने 'सरस्वतीकण्ठाभरण' २–१६० मध्ये म्हटले आहे की,

मण्डलेन तु यत् स्त्रीणां नृत्तं हल्लीसकं तु तत् ।
तत्र नेता भवेदेको गोपस्त्रीणां यथा हरिः ॥

' हल्लीसक ' आणि ' रासक ' यांचा उपरूपकांमध्ये, म्हणजे गौण नाटचप्रकारांत नृत्यनाटच म्हणून समावेश झाला आहे. शास्त्रकार त्यांत थोडा भेद करतात किंवा दोन्ही सारखेच मानतात. ' हल्लीसक ' मध्ये एक नायक आणि ७ ते १० तरुण मुली; नाटक असल्यास प्राकृत भाषेचा उपयोग; 'रास'मध्ये ८, १२, १६ किंवा ६४ पर्यंत तरुण जोडपी; ' हल्लीसक ' मंडलाकार नृत्य, तर ' रास-' मध्ये वेगवेगळे विन्यास आणि बंध, असा साधारणत: भेद दिसतो. माझा ' नाटचमंजरीसौरभ ' भांडारकर इन्स्टिटचूट, पुणे, १९८१, हा ग्रंथ ( पा. २५३–२५४ ) पाहावा.

**श्लोक २ :** 'प्रफुल्लकमल' हे 'वक्त्र' कडे आणि 'उत्पल' ( नीलवर्णीकमल ) हे 'नेत्र'कडे घ्यावे. 'गौर' म्हणजे लालवट गोरा (पांढराशुभ्र नाही). 'विराग' म्हणजे विविध रंगाचा असा अर्थ. ' केशहस्त' शब्दाने लांबसडक केस अभिप्रेत आहेत.

**श्लोक ३ :** 'वेसुकडिण्डिमैः– वेसुकचा अर्थ कळत नाही. वेस् धातु गत्यर्थक, जाणे हलणे – हलविणें या अर्थाचा कोशात दिला आहे. गोपयुवकांनी रंगीत कापडाने वेष्टिलेले (रक्तैः) ढोल, ढोलकीसारखे गळचात अडकविले होते आणि त्यांच्या वादनाबरोबर हालचालीबरोबर ते हलत होते, असा तर अभिप्राय नसेल ?

तिसऱ्या ओळीतील पहिल्या शब्दांचा अर्थ नीट लागत नाही. वुल्नर सरूप ' जागरिता ' असा पाठभेद घेऊन ' गुरुप्रमुदिता ' शी जोडून " awake with glee ' असा अर्थ करतात. सहगल यांचा ' बस्तियों मे जाकर ' हा अर्थ काही–तरीच आहे. मी ' जागरिमा ' ( मूळ जागरिमन् ) असा स्वतंत्र शब्द घ्यावा असे सुचवितो. अन्वय असा-' हुम्भारशब्दाकुले वृन्दारण्यगते घोषे गुरुप्रमुदिता जागरिमा (अद्य वर्तते) । ' आता अनुवाद पाहा. हे स्वतंत्र वाक्य घेतल्यावर ' समप्रमुदिताः स्थिताः केचित् ( गोपदारकाः ) गायन्ति । ' हें पुढील वाक्य.

**श्लोक १४–** पातप्रवृद्धः पाताय प्रवृद्धः। पडण्यासाठीच पाण्याने फुगलेला; मेघाचे विशेषण. वुल्नर–सरूप ' वातप्रवृध्द ' असा पाठ घेऊन ' Swollen by the wind ' असे भाषांतर करतात. ' एहि, क्षिपामि, धरणीतलं अभ्युपेहि । अञ्जनपर्वतस्य वज्राहतः तटः इव (त्वं भवसि)। ' असा तिसऱ्या चवथ्या ओळीचा अन्वय होईल.

**श्लोक १६–** सुजूष्यन्ते- जूष् (प्रथमगण, उभयपदी) जूषति-जूषते, इजा करणे मारणे.

# अंक ४ था

श्लोक १- **त्रास**- भीति, भय; **व्याहृत** (क. भू. धा. नाम म्हणून)- बोलण, बडबड, ' भीतीमुळे गोंधळलेली, असंबद्ध बडबड ' (गोपाङ्गनाः') चे विशेषण.

श्लोक २- **निष्पक्षिव्यालयूथम्**- ' व्याल ' – वध्य पशु. ' व्याल ' चा अर्थ साप असाही आहे; तो घेता येण्यासारखा आहे कारण डोहात कालियनाग आपल्या कुटुंबासह रहात असे. मग अर्थ असा– ' सापांचे जथे (यूथ) इथे असल्यामुळे पक्षी तो टाळतात '
' **करिव्रात**- '- हत्तींचे कळप. '**विप्रेक्षित** '–दुरून, भीतीने पाहातात, जवळ जात नाहीत असा अर्थ संदर्भाशी जुळणारा आहे.
' **अम्भोगम्भीरम्** '- पाण्यामुळे खूप खोल; पाण्याची खोली खूप असलेला ( - ऱ्हद - डोह - चे विशेषण ).
' **शङ्कित**-' घाबरलेल्या; ' शंका ' चे संशय, भीति असे दोन्ही अर्थ आहेत. ' **पेशल** '- मृदु, नाजूक.
' **कालिन्दीवासरक्तम्** '- कालिंदीत रहायला (वास) लालचावलेल्या (' भुजग ' चे विशेषण).

श्लोक ३- ' **विषदहनशिखाभिः** ' ' दहन ' हे नाम घेतल्यास ' अग्नि ' हा अर्थ; विशेषण म्हणून घेतल्यास ' जाळणाऱ्या '; ' विषाप्रमाणे' जाळणाऱ्या ज्वाळांनी; फूत्कारांनी '
' **कपिशित** '- लालसर रंग चढलेले.

श्लोक ४- **सितेतर**- (सित = शुभ्र)- कृष्ण, काळसर. **आभुग्न**–(भुज- ६ प – वाकविणे) वाकलेले, वाकविलेले, वक्र झालेले; संदर्भ दुकूल (रेशमी वस्त्र) कडे, म्हणून ' चुण्या पडलेले '
**द्रुत**– संदर्भ इन्द्रनीलमण्याकडे, म्हणून, ' प्रवाही, वाहणाऱ्या '

**कथं न दृश्यते** - दामोदराकडे घेतल्यास, अनुवादाप्रमाणे. मागील वाक्याशी संदर्भ घेतल्यास (मरून पडतात हे) ' कसं दिसत नाही ? (दिसत नाही का?) '

श्लोक ६– **परिविष्फुरन्तम्**- सर्वांगी (परि) थरथरणाऱ्या (अर्थात् रागाने). (वि + स्फुर्). **विवोल्बणफणस्य**- (उल्बण-फुगलेल्या) Swollen). **सललितम्**– नृत्याचे नाजूक अंगविक्षेप, हातवारे अभिप्रेत आहेत.

श्लोक ७ – पहिल्या दोन ओळीत दोन स्वतंत्र उपमा आहेत. विश्वाचा प्रचंड विस्तार (**भुवन-आभोग**) प्रकाश (लोक) आणि अंधार (अलोक) यात विभागला आहे. एका अर्धात प्रकाश, दुसऱ्या अर्धात अंधार. या विभागणाऱ्या सीमारेषेवर पर्वताची ( **महीधर** ) रांग आहे, अशी पौराणिक कल्पना आहे. दुसरी उपमा अमृतमंथनाची परिचित आहे. मंदर पर्वताभोवती वासुकी- सापाची दोरी गुंडाळून मंथन केले होते. वासुकि हा '**शर्व धनुर्गुण**' म्हणजे शिवाच्या धनुष्याची दोरा. **यादोनिधि** – 'यादांसि जलजन्तवः'। समुद्रिय प्राण्यांचे, राक्षसांचे समूहस्थान,- समुद्र. **त्रिदशाधिवास** – (त्रिदश–देव) देवांचे निवास-स्थान, स्वर्ग.

श्लोक १० – **कुलपर्वत** : पौराणिक कल्पनेप्रमाणे विश्वाच्या प्रत्येक खंडात एकेक प्रमुख पर्वत आहे; त्याला 'कुलपर्वत' म्हणतात. हे सात कुलपर्वत म्हणजे, 'महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥'

श्लोक १२ – **सुपर्णः एव द्रष्टा इदम्** – ('सुपर्ण' - गरुड; 'द्रष्टा' - भविष्य-काल, तृ. पु. ए. व. रूप ). 'एव' सुपर्णाशी किंवा द्रष्टाशी जोडून– 'गरुडालाच दिसेल, गरुडाला दिसेलच.'

श्लोक १३ – दुसरी ओळ – **विच्छिन्न-हार**, **पतित – अंगद** (बाहुभूषण), **लम्ब – सूत्र** (यज्ञोपवीत ) , तिन्हीचा द्वंद्व – सर्व सामासिक पद ब. व्री. 'कंसम्' चे विशेषण. **दृढम्** – 'आकृष्य' शी जोडून; किंवा क्रियाविशेषण म्हणून 'निहन्मि' कडे – दृढतापूर्वक, खंबीरपणे.

# अंक ५ वा

श्लोक ३ – आपीड-दाम – मस्तकावर (कपाळाच्या वर) बांधलेली पुष्पमाळा. **सन्नाह** – युद्ध करण्यासाठी ( चिलखत चढवून, कमर कसून, शस्त्रे घेऊन इ. सज्ज होणे.

अड्डिदकरणसन्धाबन्धप्पहारेहि – (अड्डिदकरणसन्धाबन्धप्रहारैः) – 'युद्धविशेषैः' चे विशेषण युद्धाचे द्वद्व किंवा मल्लयुद्धाच्या डावपेचाचे हे प्रकार आहेत यात शंका नाही. पण 'अड्डिद' आणि इतर शब्दांचा निश्चित अर्थ कळत नाही. वूल्नर – सरुप यांनी 'अड्ढिन्दुकरण-सन्धान' असा पाठ घेऊन 'the half-moon grip' (अर्धचंद्र) असा अर्थ केला आहे. 'बन्धप्रहार' चा 'binding blows" (बांधून ठेवणारें दणके) असा अर्थ केला आहे. एक तर्क असा की, 'अड्डिद' हे प्राकृत रुप मराठी 'अढी' चे असू शकेल. 'मग 'अड्डिदकरण' म्हणजे पायाने प्रतिपक्ष्याला अढी घालणे–' हा कुस्तीचा डावपेच. 'अड्डिद 'चा अर्थही असाच होईल. 'संधाबंध' हा देखील कुस्तीचा डावपेच; तेव्हा खांदा, कोपर, गुडघे येथील सांधे पेचात पकडणे, असा अर्थ करता येईल. मग 'प्रहार' प्रहार– याचा अर्थ मानेवर, कानावर घिस्से मारणे, मनगटाने टोले देणे, असा होऊ शकेल.

श्लोक ७– पहिल्या अर्धातील अनुप्रास ('षृ' ची पुनरुक्ती) लक्षवेधी आहे. त्याचप्रमाण श्लोक ९ मधील 'ल' चा अनुप्रास.

श्लोक २०– असेच भरतवाक्य 'स्वप्नवासवदत्त' नाटकाचे आहे. 'अविमारक,' 'प्रतिज्ञायौगन्धरायण', 'अभिषेक' नाटकांतील भरतवाक्याचा प्रथमार्ध थोडा वेगळा आहे, पण द्वितीयार्ध वरीलप्रमाणेच आहे.

नाटकाचा शेवट दर्शविण्याची ही पारंपरिक, पण प्रयोगाच्या परंपरेमध्ये रूढ झालेली पद्धती. नाटयशास्त्रात भरतवाक्याचा निर्देश नाही. सर्व नटांनी प्रयोगाच्या अंती एकत्र येऊन भरतमुनींना केलेले वंदन ( भरतमुद्दिश्य वाक्यम् ) आणि सामूहिक कल्याणाची असा त्याचा अर्थ. प्रार्थना (भरतानां नटानां वाक्यम्)

# परिशिष्ट १

# श्लोकानुमक्रणी

| श्लोकारंभ | अंक–संदर्भ | वृत्त |
|---|---|---|
| अगणितपरिखेदा | १.१० | मालिनी |
| अणुदिअमत्ते | ३.१ | आर्या (प्राकृत) |
| अतः प्रविश्य | २.२५ | अनुष्टुप् |
| अनन्तवीर्यः | १.७ | उपजाति |
| अपीदं शृणु | ३.१० | अनुष्टुप् |
| अभिनव कमला° | ५.९ | उपजाति (मिश्रवृत्त: पाद १, ३: न न र य/ पाद २,४: न ज ज र ग) १. १४ पाहा |
| अयं हि सप्तमो गर्भः | २.१७ | अनुष्टुप् |
| अहं गगनसञ्चारी | १.३ | अनुष्टुप् |
| अहं सुपर्णो | १.२१ | उपजाति (पाद १: वंशस्थ) |
| अहं हि नीलः | २.२३ | उपजाति |
| आपीडदाम° | ५.३ | वसन्ततिलका |
| इमां नदीं ग्राहभुजङ्ग° | १.१८ | वंशस्थ |
| इमां सागरपर्यन्तां | ५.२० | अनुष्टुप् |
| एकांशः पतितो भूमौ: | २.१८ | अनुष्टुप् |
| एतः प्रफुल्लकमलोत्पल° | ३.२ | वसन्ततिलका |
| एता मत्तचकोरशावनयनाः | ४.१ | शार्दूलविक्रीडित |
| एसो म्हि जुद्ध° | ५.४ | आर्या (प्राकृत) |
| कस्मिञ्जाते सशैलेन्द्रा | २.११ | अनुष्टुप् |
| कंसे प्रमथिते | ५.१७ | अनुष्टुप् |
| कार्याण्यकार्याणि | १.२८ | उपजाति |
| किं गर्जसे भुजगतो | ३.१४ | वसन्ततिलका |

| श्लोकारंभ | अंक—संदर्भ | वृत्त |
|---|---|---|
| किं दष्टः कृष्णसर्पेण | ३.९ | अनुष्टुप् |
| किं द्रष्टव्यः शशाङ्कोऽयं | १.११ | अनुष्टुप् |
| किमेतद् भो भयं नाम | ३.८ | अनुष्टुप् |
| कुण्डादरोऽहम् | २.२१ | वसन्ततिलका |
| कृत्वा खुरैर्भूमितलं | ३.४ | उपजाति |
| कोऽयं विनिष्पतति | [illegible].४ | वसन्ततिलका |
| कौमोदकी नाम हरेर्गदाहम् | १.२४ | उपजाति |
| क्रोधेन नश्यति सदा | २.३ | वसन्ततिलका |
| क्षीणेषु देवासुरविग्रहेषु | १.४ | उपजाति |
| गिरितटकठिनांसौ | [illegible].११ | मालिनी |
| गोब्राह्मणादयस्तेन | ३.१६ | अनुष्टुप् |
| गोवर्धनोद्धरणम् | ४.११ | वसन्ततिलका |
| चक्रशाङ्र्गगदाशङ्खनन्दका | १.२७ | अनुष्टुप् |
| चक्रोऽस्मि कृष्णस्य | १.२२ | उपजाति |
| चतुःसागरपर्यन्ताम् | ४.१० | अनुष्टुप् |
| चिरोपरोधसम्प्राप्तः | ५.१६ | अनुष्टुप् |
| जाने नित्यं वत्सलं त्वाम् | १.२९ | शालिनी |
| ज्येष्ठोऽयं मम तनय. | ५-१३ | प्रहर्षिणी |
| तमसा संवृते लोके | १.१७ | अनुष्टुप् |
| तमापतन्तं सहसा समीक्ष्य | ५.२ | उपजाति |
| तीक्ष्णाग्रं शूलमालम्ब्य | २.१९ | अनुष्टुप् |
| दामोदरोऽयम् | ४.५ | इन्द्रवज्रा |
| दारिका वा कुमारो वा | २.१४ | अनुष्टुप् |
| दारिकेयं मृता | २.१६ | अनुष्टुप् |
| दुद्दिणविणट्ठजोण्हा | १.१९ | आर्या (प्राकृत) |
| द्रुततुरगरथेभभ्रान्त॰ | ५.१२ | मालिनी |
| न चाहं चिरसंवासात् | २.८ | अनुष्टुप् |
| नन्दन्ति सुरतूर्याणि | ५.१४ | अनुष्टुप् |
| नन्दकोऽहं न मे कश्चित् | १.२६ | अनुष्टुप् |
| नारायण, नमस्तेऽस्तु | ५.१८ | अनुष्टुप् |
| नारायणाय नरलोकपरायणाय | १.८ | वसन्ततिलका |

| श्लोकारंभ | अक–<br>मं भं | वृत्त |
|---|---|---|
| निर्भर्त्स्य कालियमहम् | ४.६ | वसन्ततिलका |
| निष्पक्षिव्यालयूथम् | ४.२ | स्रग्धरा |
| पतत्यसौ पुष्पमयी च वृष्टिः | १.२ | उपजाति |
| परिष्वजामि गाढम् | २.९ | अनुष्टुप् |
| प्रथमसुतविनाशजातमन्यु | १.१४ | उपजाति (मिश्र वृत्तः पाद १: ३, न न र य पाद २, ४: न ज ज र ग) ५.१९ पाहा |
| प्रभ्रष्टरत्नमुकुटम् | ४.१३ | वसन्ततिलका |
| प्रविश्य रङ्गं कृतलोहमुष्टिम् | ५.७ | उपजाति |
| प्रहृष्टो यदि मे विष्णुः | ५.१९ | अनुष्टुप् |
| प्राप्तोऽस्मि तिष्ठ | ५.१० | वसन्ततिलका |
| भक्तिः परा मम | १.५ | वसन्ततिलका |
| भूतं नभस्तलनिवासी | २.१० | वसन्ततिलका |
| भ्रमति नभसि विद्युत् | १.९ | मालिनी |
| मधूकस्य ऋषेः शापं | २.१५ | अनुष्टुप् |
| मनोजवो मारुततुल्यवेगो | २.२४ | उपजाति |
| मम पादेन नागेन्द्र | ४.१२ | अनुष्टुप् |
| मर्त्येषु जन्म विफलं | ५.६ | वसन्ततिलका |
| यत्र यत्र वयं जाता | ३.१३ | अनुष्टुप् |
| यद्यस्मि भवतः किञ्चित् | १.२० | अनुष्टुप् |
| यन्मेदिनी प्रचलिता | २.१ | वसन्ततिलका |
| यस्मान्न रक्षिपुरुषाः | २.२ | वसन्ततिलका |
| रक्तैर्वसुकडिण्डिमैः | ३.३ | शार्दू विक्रीडित |
| रुद्रो वायं भवेच्छक्रो | ३.१२ | अनुष्टुप् |
| रोषेण धूमायति यस्य देहः | ४.९ | इन्द्र ज्रा |
| लङ्कोपमं मम गृहं | २.७ | वसन्ततिलका |
| लिम्पतीव तमोऽङ्गानि | १.१५ | अनुष्टुप् |
| लोकानामभयकरं | १.६ | प्रहर्षिणी |
| लोकालोकमहीधरेण | ४.७ | शार्दूलविक्रीडित |
| विध्वस्तमीनमकराद् | ४.८ | वसन्ततिलका |

| श्लोकारंभ | अंक-संदर्भ | वृत्त |
|---|---|---|
| विन्ध्यमन्दरसारोऽयं | १.१२ | अनुष्टुप् |
| विषदहनशिखाभि: | ४.३ | मालिनी |
| विसृतरुधिरधारा° | ३.१५ | मालिनी |
| विस्तीर्णलोहितमुख: | ५.११ | वसन्ततिलका |
| शङ्खक्षीरवपु: | १.१ | शार्दूलविक्रीडित |
| शङ्खोऽहमस्मि | १.२५ | अनुष्टुप् |
| शार्ङ्गोऽस्मि विष्णुकरलग्न° | १.२३ | वसन्ततिलका |
| शूलोऽस्मि भूतमिह | २.२२ | वसन्ततिलका |
| शृङ्गाग्रकोटिकिरणै: | ३.५ | वसन्ततिलका |
| श्मशानमध्यादहमागतोऽस्मि | २.५ | उपजाति |
| श्रीमान् मदान्धगज° | ५.८ | वसन्ततिलका |
| श्रुत्वा व्रजे विपुलविक्रम° | ५.१ | वसन्ततिलका |
| षण्णां सुतानां समुपेत्य नाशं° | २.१२ | उपजाति |
| सारवान् खल्वयं बालो | ३.७ | अनुष्टुप् |
| सितेतराभुग्नदुकूलकान्ति | ४.४ | उपजाति |
| सुम्भं निसुम्भं महिषं च हत्वा | २.२० | उपजाति |
| सौवर्णकान्ततरकन्दर ° | २.६ | वसन्ततिलका |
| स्मरतापि भयं राजा | २.१३ | अनुष्टुप् |
| हुङ्कारशब्देन ममेह घोषे | ३.६ | उपजाति |
| हृदयेनेह तत्राङ्गै: | १.१३ | अनुष्टुप् |
| ळोहमयमुट्ठिहत्थो | ५.५ | उपगीति (प्राकृत) |

## श्लोक संख्या

| | |
|---|---|
| अंक १ : | २९ |
| अंक २ : | २५ |
| अंक ३ : | १६ |
| अंक ४ : | १३ |
| अंक ५ : | २० |
| | १०३ |

# परिशिष्ट २

## निवडक संदर्भ


भासनाटकचक्रम् - Critically editea by C. R. Devadhar, Oriental Book Agency, Poona, 1937.

महाकविभासविरचितं बालचरितम्: इंग्रजी - हिन्दी प्रस्तावना, हिन्दी अनुवाद इ., सीताराम सहगल; मुन्शी राम मनोहर लाल, नई सडक, दिल्ली ६; १९५९.

भट, गो. के.– Bhāsa Studies, Maharashtra Granth Bhandar, Mahadvar Road, Kolhapur 1968

भट, गो. के. - **संस्कृत नाटके आणि नाटककार**; श्रीविद्या प्रकाशन २५० शनिवार, पुणे ३०; १९८०

पुसाळकर, ए. डी. : Bhāsa : A Study; Munshi Ram Manohar Lal, Delhi-6, 1940, 1968.

शास्त्री, डॉ. नेमिचंद्र: **महाकवी भास**; मध्यप्रदेश, हिन्दी ग्रंथ अकादमी, भोपाळ, १९७२.

उन्नी, डॉ.- Bhāsa Problems, Travancore University, Trivandrum.

शिवाय, History ot Sanskrit Literature : A. B. Keith, Dasagupta and De, M. Winterneit)